'एकमेवाद्वितीयं', 'तदैक्षत', 'तत्तेजोऽसृजत', 'तदपोऽसृजत', 'ता अन्नमसृजन्ते'ति श्रुतेः। तेजआदित्रिरूपत्वाद्वा कारणव्यतिरेकेण कार्याभावाद् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' 'एवं सोम्य! स आदेशः' इति श्रुतेश्च। तथा त्रिभ्यो लोकेभ्यः पुरा भावात् तद्रूपत्वाद्वा, एवं त्रिभ्यो वेदेभ्यः पुरा भावात् तत्रिरूपत्वाद्वा, त्रिभ्यो देवेभ्यः पुरा भावात् तद्रूपत्वाद्वा, त्रिभ्यः सूर्याग्नीन्दुभ्यः पुरा भावात् तद्रूपत्वाद्वा त्रिभ्यः प्रमात्रादिभ्यः पुरा भावाद् तद्रूपत्वाद्वा तिसृभ्यः शक्तिभ्यः पुरा भावात् तद्रूपत्वाद्वा इत्यादि। इह महामन्त्रः पुरा अस्या एव त्रिपुराख्या यतस्त्रीणि बीजानि पश्यन्तीमध्यमावैखरीरूपाणि। इह सर्वान्तरात्मनः परमेश्वरस्यानवच्छिन्नाहन्तापरामर्शमय्यनपायिनी चाद्या। द्वितीया देहादिपरिच्छिन्नाहन्तापरामर्शमयी। तृतीया देहादिमायाप्रमातृभ्योऽन्यत्र नीलसुखादौ स्वात्मन्येवेदन्तापरामर्शमयी। चतुर्थी तद्विस्तारमयीति भेदः। पुरैस्त्रिभिरित्यनुक्तिः पदैस्त्रिभिरित्युक्तिश्च श्रुतिप्रत्यभिज्ञापनार्था। 'चत्वारि वाक् परिमिता पदानी'त्यादिका श्रुतिरत्रानुसन्धेया। अत्र स्तुतौ त्रिपुराशब्दो देवतावाची। इतरत्र मन्त्रवाचीति द्रष्टव्यम्॥ १॥

एवं त्रिपुरामन्त्रदेवतातदुपासनास्थानफलानि सामान्येनोपदिश्याथ तद्विशेषोपदिदिक्षुः प्रथमं नादबिन्दुबीजभेदेन त्रिधा स्थितस्य प्रथमबीजस्य निष्कलसकलनिष्कलसकलभेदेन त्रिधावस्थितदैवतस्य माहात्म्यं द्वाभ्यां श्लोकाभ्यां कथयति —

**या मात्रा त्रपुसीलतातनुलसत्तन्तूत्थितिस्पर्धिनी**
**वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम्।**
**शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां**
**ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः॥ २॥**

या मात्रेति। अनयोराद्येन सनादस्य बिन्दोः सदैवतस्योपासनाफलमघच्छेद एवेति वर्णयति। यद्यप्यघच्छेदः पूर्वश्लोके त्रिपुरा-

१. 'ला' ग. पाठः.

चतुष्टयं च मूर्धनि श्रीगुरुपादुकान्ते वामदक्षिणमध्यसर्वोर्ध्वप्रदेशेषु द्वादशान्तस्थसहस्रदलपद्मकर्णिकायां स्मृत्वा विन्यस्याधारे गणेशं, हृदि सपरिवारां देवीं च मूलेन नत्वास्त्रमन्त्रेण करतलशुद्धितालत्रयदिग्बन्धनाग्निप्राकारान् विधाय नाभिहृद्भ्रूमध्येषु बालाबीजानि विन्यस्य हृदयं स्पृष्ट्वा तां चतुर्वारमावर्त्यान्ते श्रीत्रिपुरेश्वरि! आत्मानं रक्ष इत्यात्मरक्षां कृत्वा, रेचकादिक्रमेण त्रिषड्द्वादशाभ्यस्तं मूलबीजैः प्राणायामत्रयं कृत्वा समस्तव्यस्तमूलबीजैश्चतुर्वारं व्याप्य शक्त्यण्डमायाण्डप्रकृत्यण्डपृथ्व्यण्डमात्रपरमार्थं सामान्यकारणसूक्ष्मस्थूलशरीरचतुष्कमुत्पाद्यानुलोमविलोममूलपुटिकां मातृकां विन्यस्य

> "नाभेरथाचरणमा हृदयाच्च नाभि
> मूर्ध्नस्तथाहृदयमित्यमुना क्रमेण ।
> बीजैस्त्रिभिर्न्यसतु हस्ततले च सव्य-
> दक्षाह्वये द्वितयमित्युभयोस्तृतीयम् ॥
> मूर्धनि गुह्ये हृदये नेत्रत्रितयेऽपि कर्णयोरास्ये ।
> अंसद्वये च पृष्ठे कोर्परयोर्नाभिमण्डले न्यस्येत् ॥"

इत्याचार्योपदिष्टक्रमेण मन्त्राक्षराणि तनौ न्यस्याङ्गषट्कसृष्ट्यादित्रिकं च न्यस्य ऐं बीजं, सौः शक्तिः, क्लीं कीलकं, श्रीत्रिपुरादेवीप्रसादसिद्ध्यर्थे विनियोग इति स्मृत्वा आं ह्रीं क्रों य- र- ल- व- श- ष- स- हों- सं- हं- सः श्रीत्रिपुरादेव्याः प्राणा इह प्राणाः । एवं श्रीत्रिपुरादेव्या जीव इह स्थितः । एवं श्रीत्रिपुरादेव्याः सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा हंसः[2] सं लं इति[3] प्राणप्रतिष्ठां कृत्वा अक्षस्रक्पुस्तकाभयवरमुद्रा अक्षस्रजे नमः[4] पुस्तकाय अभयाय वरदाय इति विरचय्य । ऐं इति योनिमुद्रां च बद्ध्वा ध्यात्वा यथाविधि षोडशभिः पञ्चभिर्वा मानसोपहारैरभ्यर्च्य ब्रह्मार्पणमनुना ब्रह्मार्पणम् आत्मार्पणमनुना आत्मार्पणं च कृत्वा मूलेनैक्यमुपगम्य स्वयं देवतामूर्तिर्भूत्वा गुरोर्गृहीतां सुगन्धालिप्तां सुधूपितां चाक्षमालामादाय मन्त्रजपं कुर्यात् । स च जपस्त्रिविधः, वाचिकोपांशुमानसभेदात् । यथोक्तं —

---

१. 'ण इ', २. 'सं हं सः इ' क. पाठः. ३. 'ति हृदि प्रा' ग. पाठः. ४. 'मः विद्यापु', क. ख. पाठः.

"यदुच्चनीचस्वरितैः स्पष्टैः शब्दपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः ॥
शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् ।
ईषच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥
ध्यानं यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः ॥"

इति । जपान्ते पुनर्देवीं पृथक् स्वपुरत इव सञ्चिन्त्य

"गुह्यातिगुह्यगोप्त्रि! त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि! त्वत्प्रसादाद्धृदि स्थिते! ॥"

इति मन्त्रेण देव्याश्चरणमूले जपं समर्प्य प्राणायामत्रयं व्यापकत्रयम् अङ्गुल्यादिन्यासं च विदध्यादिति त्रिपुरामन्त्रजपसामान्यसंक्षेपः । विस्तरस्त्वन्यतो द्रष्टव्य इति शिवम् ॥ ६ ॥

चिन्तितं जप्तं वेत्यत्र कथं चिन्ता कार्येत्यपेक्षायां निष्कलरूपस्य ज्योतिर्मयी वाङ्मयीत्युपदिष्टत्वादैन्द्रस्येवेति सकलनिष्कलरूपस्य चोपदिष्टत्वादवशिष्टं देव्याः सकलं रूपमाह वाम इति पञ्चभिः श्लोकैः ।

**वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे**
**भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् ।**
**उज्जृम्भाम्बुजपत्रकान्तिनयनस्निग्धप्रभालोकिनीं**
**ये त्वामम्ब! न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥**

वाम इति । हे अम्ब! जगन्मातः! ये त्वां मनसा न शीलयन्ति न ध्यायन्ति । वाचा त्वन्मन्त्रं न जपन्ति च । तेषां कुतः कवित्वं क्रान्तदर्शित्वं सार्वज्ञ्यं, न कुतश्चित् । ये तु पुनः शीलयन्ति, तेषां कवित्वाभावो वा कुतः । कीदृशीं त्वां, चतुर्षु करेषु वामे ऊर्ध्वाधःक्रमेण पुस्तकधारिणीम् अभयदाम् अभयमुद्राधारिणीं च । दक्षिणे साक्षस्रजं भक्तेभ्यो वरदानपेशलकरां स्फटिकाक्षमालाधारिणीं वरदमुद्राधारिणीं च । कर्पूरकुन्दोज्ज्वलां कर्पूरवत् कुन्दवच्चोज्ज्वलां शोभमानाम् । उज्जृम्भाम्बुजपत्रकान्तिनयनस्निग्धप्रभालोकिनीम् उज्जृम्भा उज्जृम्भणं

विकासः, तया युक्तं यदम्बुजं तस्य पत्रम् अन्तर्दलं, तस्य कान्तिरिव कान्तिर्येषां नयनानां, तेषां स्निग्धः कृपारसार्द्रः प्रभायुक्तश्च य आलोक आलोकनम् ईक्षणं, तद्वतीम् । सुसिताम्बरानुलेपमाल्यालङ्कृतां कपर्दभारविधृतचन्द्रखण्डां चेति द्रष्टव्यम् ॥ ७ ॥

एवं बीजत्रयसाधारणं ध्येयं रूपं सार्वज्ञ्यलक्षणं तत्सेवाफलं चोक्त्वा इदानीं शक्तिकामराजवाग्भवक्रमेण द्वादशान्तमूलाधारहृत्पद्मेषु ध्येयसाधारणं रूपं फलं चाह[१]—

**ये त्वां पाण्डरपुण्डरीकपटलस्पष्टाभिरामप्रभां**
**सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम्[२] ।**
**अश्रान्तं विकचस्फुटाक्षरपदा निर्याति वक्त्रोदरात्**
**तेषां भारति ! भारती सुरसरित्कल्लोललोलोर्मिवत् ॥**

ये त्वां पाण्डरेति। हे भारति! ये त्वां मूर्ध्नि स्थितां ध्यायन्ति, तेषां वक्त्रोदराद् अश्रान्तम् अक्लेशेन भारती निर्याति। सुरसरित्कल्लोललोलोर्मिवत् सुरसरिद् गङ्गा तस्याः कल्लोलैः बृहत्तरङ्गैः लोलाश्चञ्चला या ऊर्मयः प्रवाहाः तद्वत्। कीदृशी भारती, विकचस्फुटाक्षरपदा विकचान्यसंकुचितानि स्फुटाक्षराणि (पदानि यस्यां?) तत्तदर्थाभिधाने समर्थानि सुप्रसन्नाक्षराणि च पदानि यस्यां सा तथोक्ता। किंवर्णां ध्यायन्ति, पाण्डरपुण्डरीकपटलस्पष्टाभिरामप्रभां पाण्डरपुण्डरीकपटलवत् सितपद्मपुञ्जवत् स्पष्टा धवला अभिरामा हृद्या च प्रभा यस्यास्ताम्। किंव्यापाराम्, अमृतद्रवैः स्वाङ्गगलितैः साधकस्य शिरः सिञ्चन्तीमिव। इवशब्दो वाक्यालङ्कारे।

"मूर्ध्नि पुस्ताक्षमालादिवरदोज्ज्वलविग्रहाम् ।
शिवशक्त्यात्मिकां ध्यायेत् कुन्देन्दुधवलप्रभाम्" ॥ ८ ॥

---

१. 'पफलमाह' क. पाठः. २. 'माम् ॥ श्रीभारति! ये त्वां मूर्ध्नि स्थितां ध्यायन्ति, तेषां वक्त्रोदरादश्रान्तसंक्लेशेन भारती निर्याति सुरसरित्कल्लोललोलोर्मिवदिति पुरस्तादेव द्रष्टव्यम् ॥ एवं' ग. पाठः.

एवं वाग्भवादिधर्मार्थिभिः सेव्यं रूपं समुपदिश्य कामार्थिभिर्ध्येयं रूपं समुपदिदिक्षुर्द्वितीयबीजस्यासाधारणं ध्यानं फलं चाह —

**ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमा-**
**मुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव ।**
**पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-**
**क्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति ध्रुवम् ॥**

ये सिन्दूरेति । भारतीति संबोधनमनुषज्यते ।

"गुह्यस्थितं वा मदनस्य बीजं
जपारुणं रक्तसुधां स्रवन्तम् ।
विचिन्त्य तस्मिन् विनिवेश्य साध्यां
वशीकरोत्येव विदग्धलोकः ॥"

इत्याचार्यैरनुगृहीतत्वादिहोत्तरश्लोके 'ये त्वां चेतसी'ति वक्ष्यमाणत्वादिह स्थानविशेषानुक्तेश्चाधारपद्मस्थरूपध्यानमेतदिति गम्यते । न च पूर्वापरविरोधः । उपासनाविशेषवदाधारविशेषस्यापि कार्यविशेषेऽभिमतत्वात् । पूर्वं सार्वज्ञ्यार्थमुपासनं सर्वेषामुक्तम्, इदानीमेकैकस्य बीजस्य धर्मादिफलत्वमुच्यत इति सिद्धो विशेषः । कामगिरिपीठत्वं कामेश्वरीस्थानत्वं चाधारपद्मस्य । श्रीसौभाग्यमार्गेऽप्ययमर्थमुपोद्बलयति । हे भारति! इमां द्याम् अन्तरिक्षं सिन्दूरपरागपुञ्जपिहितामिव, उर्वीमपि च यावकरसप्रस्तारमग्नाम् अलक्तकद्रवप्रवाहप्लुतामिव ये क्षणमपि पश्यन्ति । केन, त्वत्तेजसा अत्यन्तरक्तवर्णाया भवत्याः सर्वतःप्रसृतश्रीमूर्तिप्रभाप्रतानेन । किं कृत्वा, अनन्यमनस एकाग्रचेतसो भूत्वा। स्वासने विधिवदुपविश्य प्राणायामैर्दोषान् संहृत्य स्वविषयेभ्य इन्द्रियाणि मनसा सह प्रत्याहृत्येत्यर्थः । यद्वा, अनन्यमनसः स्वात्मानमेव तादृशीं त्वां गुरुतः शास्त्रतोऽनुभवतश्च निश्चिन्वानाः

१. 'र्वीं' क. ख. पाठः. २. 'हि' ग. पाठः.

'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति, न स वेद, यथा पशुरेवं स देवानामि'ति भेददर्शिनः श्रुत्या निन्दितत्वात्। उपपत्तेश्च। कथमात्मनोऽन्यस्या भवत्यास्तनुप्रभाब्धिमग्नं स्त्रीपुरुषात्मकं जगत् तथा ध्यातुः पुंसो वशवर्ति भवेत्, स्वयं वा कुतस्तस्य हृदि प्रत्यक्षतामुपगच्छेत्। न खल्वात्मनोऽन्यः कश्चिद् देहान्तः समस्तीति हि सर्वसम्मतमित्युपपत्तिः सिद्धा। किं पुनस्तेषामित्यत्राह — तेषामिति। अनङ्गज्वरक्रान्ताः एतस्मिन् श्रुते दृष्टे वा संभूतेनानङ्गेन अन्तर्गूढेन यो ज्वरो महांस्तापस्तेन क्रान्ता विवशीभूततनवः। त्रस्तकुरङ्गशावकदृशः त्रस्तस्य भीतस्य कुरङ्गशावकस्य मृगबालकस्य दृग् दृष्टिरिव दृग् यासां तास्तथा। सर्वाङ्गसुभगाः स्त्रियोऽपि तेषां वश्या भवन्ति, याः स्ववशीभूताखिलभूमण्डलानां भूपतीनामपि न सर्वथा वशगाः स्युः। ध्रुवं निश्चितमेतत्। त्वद्भक्तजनानां स्वानुभव एवात्र मानमिति भावः।

"आधाराब्जे धनुर्बाणवरदाभयलक्षिताम्।
ध्यायेद् बन्धूकपुष्पाभां कामराजस्वरूपिणीम्" ॥ ९ ॥

एवं विशिष्टविषयपरिग्रहेण सर्वकामावाप्तिद्वितीयबीजोपासनफलमुपदिश्यार्थिनामुपासनमुपदिदिक्षुराद्यबीजस्यासाधारणं ध्यानं फलं चाह —

चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं
ये त्वां चेतसि तद्गते[1] क्षणमपि ध्यायन्ति कृत्वा स्थिराम्।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ते श्रियः॥

चञ्चदिति। अत्रापि भारतीत्यनुषज्यते। ये त्वां चेतसि हृत्पद्मे स्थिरां कृत्वा निश्चित्य। क्षणमपि ध्यायन्ति स्वात्मतयोपासते।

---

१. 'पि व' क. पाठः.

कथंभूतां, चञ्चत्काञ्चनकुण्डलाङ्गदधरां चञ्चद्भ्यां[2] कम्पमानाभ्यां काञ्चनकुण्डलाभ्यां सहाङ्गदानि धारयतीति तथा, ताम्। आवद्धकाञ्चीस्रजम् आबद्धा काञ्ची काञ्चनकमलस्रक् च यया ताम्। आवद्धकाञ्चीसूत्रां वा। चेतसि स्थिरीकरणं कुत इत्यत उक्तं—तद्वते! सर्वभूतान्तरा[3]त्मत्वेन तत्रैव सदा वर्तमाने[4]! इति संबोधनविशेषणमेतत्। तेषां वेश्मसु श्रियः सम्पदः चिरं स्थैर्यं भजन्ते। कथंभूताः, माद्यत्कुञ्जरकर्णताललरलाः माद्यतः मदोन्मुखस्य कुञ्जरस्य कर्णतालवत् तरला अस्थिराः, अस्थिरस्वभावा अपीत्यर्थः। किं कुर्वन्त्यः, अहरहः स्फारीभवन्त्यः वृद्धिमुपगच्छन्त्यः। कुतो हेतोः, विभ्रमाद् विलासात्। भूहिरण्यपशुव्रीहियववाहनरत्नवसनाद्यनेकरूपप्रकाशनात्। यद्वा माद्यत्कुञ्जरकर्णताललरलाः माद्यतां कुञ्जराणां कर्णतालेन तरलाश्चञ्चला अपि स्थैर्यं भजन्त इति गजाश्वादिसिद्धिरुद्घाटिता।

"हृत्पद्मे काञ्चनप्रख्यां पाशाङ्कुशसमुज्ज्वलाम्।
वरदाभयहस्तां च ध्यायेद् वाग्भवरूपिणीम्" ॥ १० ॥

अथ मोक्षार्थिभिर्ध्येयं रूपमुपदेष्टुकामः पूर्वोक्तनिष्कलाक्षरस्य द्वितीयबीजगतस्य, 'तत्सारस्वतमि'ति सरस्वतीतत्त्वज्ञानान्तरङ्गसाधनत्वेन स्वोपदिष्टस्यासाधारणं ध्यानं फलं चाह—

**आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं**
**बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम्।**
**त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं**
**मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ॥११॥**

आर्भट्येति। अत्रापि भारतीत्यनुषज्यते। आर्भट्या आर्भटिकासिकया।

"ऊरुद्वयं निधायोर्वोः स्थितिरार्भटिकासनम्।"

१. 'त्वा', २. 'ति त' ख., 'न्तीं' ग. पाठः. ३. 'रत्वे' क. पाठः ४. 'ने! सं' ख. पाठः.

तेन । प्रेतासनाध्यासिनीं, प्रकर्षेण इतः सङ्गतः स्वमेलनं प्राप्तः परमशिवः प्रेतः, स एव वासुकिशय्यायां सुखं शयानः प्रेतासनं, तदधिष्ठितः तस्मिन्नासितुं शीलं यस्यास्ताम् । शिववामाङ्कभुवि निषण्णामित्येतत् । एवम्भूतां त्वाम् । त्वद्रूपसंवित्तये तव स्वरूपसाक्षाद्बोधसिद्धये ध्यायन्ति । किंविशिष्टां, शशिखण्डमण्डितजटाजूटां, शशिखण्डेन शशिकलया मण्डितो जटाजूटो यस्यास्ताम् । नृमुण्डस्रजं मल्लिकामालावतीं, नृमुण्डवत् स्थूलवृत्तधवलमुक्ताफलस्रजं वा, चम्पकस्रग्विणीं वा । बन्धूकप्रसवारुणाम्बरधरां बन्धूकप्रसववद् अरुणम् अम्बरं वासो धारयतीति तथा, ताम् । चतुर्भुजां चत्वारो भुजा यस्यास्ताम् । त्रिनयनां त्रीणि नयनानि यस्यास्ताम् । आपीनतुङ्गस्तनीम् आपीनौ तुङ्गौ च स्तनावस्या इति तथा, ताम् । मध्ये निम्नवलित्रयाङ्किततनुं मध्ये मध्यप्रदेशे निम्ना अवनता वलित्रयाङ्किता च तनुर्यस्यास्तां, सर्वाङ्गसुभगामिति यावत् ।

"इक्षुचापप्रसूनेषुपाशाङ्कुशलसद्भुजाम् ।
ईशान्ताब्जेऽरुणां ध्यायेद् देवीं कामकलामयीम् ॥

अथवा वाग्भवेनैव मूलाधारे स्मरेच्छिवाम् ।
हृदये कामबीजेन भ्रूमध्ये चान्तिमेन वै ॥

द्वादशान्ते स्मरेद् देवीं ततः कामकलाकृतिम् ।
हृदये वा स्मरेदेनां प्राचीनैरुक्तमार्गतः ॥

अक्षस्रक्पुस्तकाभीतिवराढ्यामरुणाकृतिम् ।"

ऐन्द्रस्येवेतीहोपदिष्टं सकलनिष्कलध्यानमाचार्यैर्विवृतं—

"वह्नेर्बिम्बे दलपरिवृताधारसंस्थं समुद्य-
द्बालार्काभं स्वरगणसमावेष्टितं वाग्भवाख्यम् ।
वाण्या स्वीयाद् वदनकुहरात् सन्ततं निःसरन्त्या
ध्यायेन्मन्त्री प्रततकिरणप्लावृतं दुःखशान्त्यै ॥

१. 'का' ख. ग. पाठः.

हृत्पद्मस्थितभानुबिम्बविलसद्योन्यन्तरालोदितं
मध्याह्नार्कसमप्रभं परिवृतं वर्णैः कफाद्यन्तकैः ।
ध्यायेन्मन्मथराजबीजमखिलब्रह्माण्डविक्षोभकं
राज्यैश्वर्यविवर्धिनीमपि रमां दत्त्वा जगद् रञ्जयेत् ॥
मूर्ध्नोऽथ द्वादशान्तोदितशशधरबिम्बस्थयोनौ स्फुरन्तं
संवीतं व्यापकार्णैर्धवलरुचिमकारस्थितं बीजमन्त्यम् ।
ध्यात्वा सारस्वताच्छामृतजललुलितं दिव्यकाव्यादिकर्ता
नित्यं क्ष्वेलापमृत्युग्रहदुरितविकारान् निहन्त्याशु मन्त्री ॥"

इति । एकैकबीजजपक्रमश्चाचार्यैरनुगृहीतः —

"अच्छाभः स्वच्छभूषो धरणिमयगृहे वाग्भवं लक्षमेकं
यो जप्यात् तद्दशांशं विहितहुतविधिर्मन्त्रजप्ताञ्जनाभिः ।
काव्यैर्नानार्थवृत्तैर्भुवनमखिलमापूरयेच्च स्वकीयै-
र्मारार्त्ता विह्वलाभिः पुनरयमनिशं सेव्यते सुन्दरीभिः ॥
रक्ताकल्पोऽरुणतरदुकूलार्तवालेपहृद्यो
मौनी भूसद्मनि सुखनिविष्टो जपेल्लक्षमेकम् ।
बीजं मन्त्री रतिपतिमयं प्रोक्तहोमावसानं
योऽसौ लोके स सुरमनुजैः सेव्यते पूज्यते च ॥
धरापवरके तथा जपतु लक्षमन्त्यं मनुं
सुशुक्लकुसुमांशुकाभरणलेपनाद्यो वशी ।
अमुष्य वदनादनारततयोच्चरेद् भारती
विचित्रपदपद्धतिर्भवति चास्य लोको वशे ॥"

एवं पञ्चश्लोक्या देव्याः सकलध्यानप्रकारः प्रकटीकृत इति शिवम् ॥ ११ ॥

'ये त्वामम्ब ! न शीलयन्ति मनसा तेषां कवित्वं कुतः' इत्यत्र त्वत्सेवाहीनानां सार्वज्ञ्यमुपलक्षणन्यायेन सर्वैश्वर्यं च दुर्लभमित्युक्तम् । इदानीं त्वत्सेवकानां तदुभयमिदैनात्यल्पानामपि सुलभमित्याह —

---

१. 'द्रुक्तिही' ख. पाठः.

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निश्शेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः ।
यद् विद्याधरबृन्दवन्दितपदः श्रीवत्सराजोऽभवद्
देवि! त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ॥

जात इति । हे देवि ! सोऽयं त्वच्चरणाम्बुजप्रणतिजः तव चरणाम्बुजयोः प्रणतेर्जातः । प्रसादोदयः भवत्याः प्रसादोऽनुग्रहाभिमुख्यं, तस्योदय उद्भव एव । त्वत्सेवाफलमेव भवतीति वृद्धा आचक्षत इति शेषः। कोऽसावित्यत उक्तं —जात इत्यादि । श्रीवत्सराजो नाम राजा क्षितिभुजां सामान्यमात्रे, न मूर्धाभिषिक्तानां क्षत्रियाणां कुले, किन्तु माण्डलिकानाम् । तत्रापि न भूरिधनधान्यपशुपरिषत्क्षेत्रादिमति, किन्तु अल्पपरिच्छदे कुले जातोऽपि प्रतापोन्नतः प्रतापो नामारीणां दूरादेव भयजनकत्वं, तेनोन्नतः उन्नतिमतिशयं प्राप्तः सन् । निःशेषावनिचक्रवर्तिपदवीं, निःशेषायाश्चतुःसागरपर्यन्तायाः अवनेः चक्रवर्ती आज्ञाधरः[1] सार्वभौमो राजा निःशेषावनिचक्रवर्ती तस्य पदवीम् । लब्ध्वा अक्लेशतः प्राप्य । विद्याधरबृन्दवन्दितपदः, विद्याः

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् ।
अर्थशास्त्रं परं तस्माद् विद्यास्त्वष्टादश स्मृताः ॥"

इति श्रीवायवीय उपदिष्टाः, ताः ये धारयन्ति पठन्ति शृण्वन्ति परेभ्योऽनुगृह्णन्ति यथाधिकारं स्वयं तदर्थमनुतिष्ठन्ति च, ते विद्याधराः, तेषां बृन्देन सङ्घेन वन्दितपदः वन्दितौ पादौ यस्य स तथा । स्वयं तासु तासु विद्यासु परिपक्वपक्षपतितेषु प्रधानस्तत्तद्विद्याधराणां द्विजादीनां पालकः पूजकश्चेति यावत् । एवं सम्राट् सर्वज्ञश्चाभवदिति

१. 'शेषतः' क. पाठः. २. 'प' क. ख. पाठः.

यत्, सोऽयमिति संबन्धः। नृत्तगीतवाद्यादिचतुष्षष्टिकलाविद्यावन्तो विद्याधरा इति न व्याख्येयं, राज्ञः किञ्चिज्ज्ञतासूचकत्वात्। नापि त्रिपुराविद्याभेदाभिज्ञा विद्याधराः, राज्ञः सर्वदेवताविग्रहवत्यां परदेवतायां भक्तिराहित्यव्यञ्जकत्वात्। नापि विद्याधरा देवयोनिष्ववर्वाचीनपदस्थाः केचन वैमानिकाः तेषां वृन्देनेति व्याख्येयं, दिव्ये विद्याधरपदे दीव्यतां तेषां सम्राजो ह्यस्य सेवकत्वासंभवात्। अत एवोक्तं श्रुत्या — 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। ते हि ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः' इत्यादि ॥ १२ ॥

अथ 'ये त्वामम्ब ! न शीलयन्ति मनसा तेषां कवित्वं कुतः' इत्युक्तमर्थं विवृण्वन् विपर्यये दोषमाह —

**चण्डि ! त्वच्चरणाम्बुजार्चनकृते बिल्वीदलोल्लुण्टन-**
**त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः ।**
**ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितै-**
**र्जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥**

चण्डीति। हे चण्डि ! स्वसेवाविमुखलोकविभियकरणनिपुणे ! इह येषां देहिनां कराः त्वच्चरणाम्बुजार्चनकृते तव चरणाम्बुजार्चनार्थम्। बिल्वीदलोल्लुण्टनत्रुट्यत्कण्टककोटिभिः बिल्वीदलानि बिल्वपत्राणि तेषाम् उद् उच्चैः अनुवासरं भूरिशो लुण्टने छेदने त्रुट्यतां छिद्यमानानां कण्टकानां कोटिभिरग्रैः। परिचयं मेलनं विलेखनरूपं न जग्मुः।

"पत्रेषु बिल्वपत्रं स्यान्नान्यत् पत्रं विशिष्यते।
इयमारंसरोजानामीषद्विकसितं भवेत् ॥"

इत्यागमेषु पुष्पविधानाद् बिल्वीदलेत्युक्तम्। ते कथमिव पृथिवीभुजो जायन्ते। किंलक्षणाः, दण्डाद्यङ्कितैः अम्भोजप्रभैश्च पाणिभिरुपल-

१. 'रे सरोजादार्वाप' ख. पाठः.

क्षिताः । कथं वा कवयो जायन्ते इति शेषः । 'वामे पुस्तके'त्यत्र सार्वज्ञ्येन साम्राज्यमुपलक्षितम्, इह साम्राज्येन सार्वज्ञ्यमिति भेदः ॥ १३ ॥

'त्वच्चरणाम्बुजार्चनकृते' इत्यत्र केषां ते चरणार्चनाधिकारः, कैर्वा साधनैः, किंलक्षणा वा भवत्यर्चनीया, किं वा तवार्चकानां फलं, कियता कालेन वा तद् भवेदित्यपेक्षायामाह —

**विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै-**
**स्त्वां देवि! त्रिपुरे! परावरमयीं सन्तर्प्य पूजाविधौ ।**
**यां यां प्रार्थयते मनः स्थिरतया तेषां त एते ध्रुवं**
**तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥१४॥**

विप्राः क्षोणिभुज इत्यादि । हे त्रिपुरे! देवि! विप्राः क्षोणिभुजो विशस्तदितरे स्त्रीशूद्रादयो विलोमजाश्च ये, त एते सर्वे पूजाविधौ पूजाया विधानं करणं विधिस्तस्मिन् । क्षीरादिभिः परावरमयीं सकलनिष्कलाकारां त्वां सन्तर्प्य गन्धाक्षतकुसुमं बिन्दुमेकमपि दत्त्वा तोषयित्वा यां याम् ऐहिकीमामुष्मिकीं वा अल्पामनल्पां वा सिद्धिं फलं तेषां मनः स्थिरतया नित्यं प्रार्थयते, तां तां विघ्नैः प्राप्तैरप्यविघ्नीकृता एव तरसा अस्मिन्नेव जन्मनि अव्यवहितजन्मान्तरे वा अवाप्नुवन्ति । ध्रुवं निश्चितमेतत् । त्वद्भक्तानां स्वानुभव एवात्र मानमिति भावः । यथाहुः —

"यत्रास्ति भोगो न च तत्र मोक्षो यत्रास्ति मोक्षो न च तत्र भोगः ।
श्रीशङ्करीतर्पणतत्पराणां भोगश्च मोक्षश्च करस्थ एव ॥"

इति । श्रीभगवताप्यनुगृहीतं —

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥"

इति,

"पार्थ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।
नहि कल्याणकृत् कश्चिद् दुर्गतिं तात! गच्छति ॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥"

इत्यादि । किं क्षीरादि विप्रादिभिः प्रत्येकं सर्वं संबध्यते, किं वा क्रमेणैकैकमेकैकेन विप्रादिनेति विशये ब्राह्मणैराज्यस्य क्षत्रियैर्वैश्यैश्च क्षीरस्य चार्चनायामवश्यमङ्गीकरणीयत्वान्न द्वितीयपक्षो युज्यते। 'ब्राह्मणो न सुरां पिबेत्' इति वाक्यमदीक्षितविषयं, न ब्राह्मणमात्रविषयम् । अतः सौत्रामण्यामिव ब्राह्मणस्यापि पैष्ट्या मदिरया परदेवतातर्पणं न दुष्यतीति प्रथमपक्षो ग्राह्यः । तत्रापि यथासम्भवं यथाशक्ति यथामति यथारुचि च सर्वेषां सर्वद्रव्याणि ग्राह्याणि । अत एव श्रुतिः—'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारमि'ति । एवञ्चेद्, 'इष्टशिष्टमश्नीयादि'ति विधानाद् ब्राह्मणस्यासवपानकर्तव्यता प्राप्नोति चेत् । न । सौत्रामण्यामिव घ्राणभक्षणेनापीष्टशिष्टाशनसिद्धेः ।

"लोके निकृष्टमुत्कृष्टं लोकोत्कृष्टं निकृष्टकम्"

इति कौलमार्गस्थानामङ्गीकाराच्च । यथोक्तमुत्पलदेवेन श्रीमत्स्तोत्रावल्यां—

"वेदागमविरुद्धाय वेदागमविधायिने ।
वेदागमसतत्त्वाय गुह्याय स्वामिने नमः ॥"

इति । पराक्रान्तं चात्र पूर्वसूरिभिरिति किमास्माकीनेन प्रयासेन। तथाहि तद्वचनं—

"सर्वागमविरोधित्वान्नेदं प्रामाण्यमर्हति ।
अपि प्रत्यक्षसिद्धत्वात् प्रमाणं तु शिवोदितम् ॥

अयं तु निर्णयोऽत्र स्याद् ये यत्रानधिकारिणः ।
तेषां तदप्रमाणं स्यात् प्रमाणं चाधिकारिणाम् ॥

नाधिकारी न कोऽप्यत्र न प्रामाण्यं प्रयोजकम् ।
प्रायः प्रत्यक्षसिद्धत्वं शिवोक्तत्वं च नो मतम् ॥"

इत्यादि । तदेवं सर्वेषां सर्वद्रव्याणि यथासम्भवं यथाशक्ति यथारुचि च ग्राह्याणीति रमणीयम् ।

अयमिह पूजाक्रमः—सौवर्णे राजते ताम्रमये वा पट्टे भूपुर-द्वितयवृत्तान्वितमष्टदलं पद्मं तत्कर्णिकायां,

"वह्नेः पुरद्वितयवासवयोनिमध्य-
सम्बद्धवह्निवरुणेशसमाश्रिताश्रि ।
देव्यर्चनाय विहितं मुनिभिः पुरैव
लोके सुदुर्लभमिदं नवयोनिचक्रम् ॥"

इत्युक्तलक्षणं नवयोनिचक्रं च विलिख्य विचित्रे संक्षालिते सुगन्धा-लिप्ते सुधूपिते च दारुमये पीठे यथाविध्यभिषेकादिभिः संस्कृत्य नि-धाय पूर्वोक्तक्रमेण जपं कृत्वा न्यासावसाने चाग्रतो वामभागे शङ्खे सामान्यार्घ्यं हैमादिपात्रे तद्दक्षिणतो विशेषार्घ्यं च संपाद्य स्वमूर्धनि श्रीनाथपङ्क्तिं रहस्यचरणचतुष्कं चाधारे गणेश्वरं हृदि मूलविद्यया सपरिवारां देवीं च गन्धाक्षतकुसुमैरमृतबिन्दुभिस्तर्पयित्वा स्वयं तत्त्व-त्रयप्रकाशनं विधाय श्रीत्रिपुरादेवीवपुर्भूत्वा बाह्यपूजामारभेत । अत्र विशेषार्घ्यगतोऽयं क्षीरादिद्रव्यविकल्पः । अयमिहोपदेशाध्वा—ब्राह्मणः क्षीरमेव सुशृतं सम्पाद्य तेनामृतीकृतेन विशेषार्घ्यं पूरयित्वा-र्चयेत् । तदलाभे त्वाज्येन, तदलाभे मधुना, तस्याप्यलाभे आसवेन, तस्याप्यलाभे गन्धोदकेन । क्षत्रियस्त्वाज्येन, तदलाभे क्षीरेण, तद-लाभे मधुना, तस्याप्यलाभे आसवेन, तस्याप्यलाभे सुगन्धोदकेन । वैश्यस्तु मधुना, तदलाभे घृतेन, तदलाभे क्षीरेण, तस्याप्यलाभे आसवेन, सर्वालाभे गन्धोदकेन । शूद्रस्त्वासवेन, तदलाभे मधुना, तदलाभे त्वाज्येन, तदलाभे क्षीरेणेति । सर्वालाभे सुगन्धोदकेनार्घ्या-

---

१. 'नम्' क. पाठः. २. 'र', ३. 'शं हृ', ४. 'प्राश' ग. पाठः.

पादनमस्यापि समानमिति । इयानेवात्र दक्षिणवामाध्वगयोर्द्विजयोर्भेदः । कोऽसौ । यदासवेन संन्तर्पयति परदेवतां, तदान्ते घ्राणभक्षणमात्रं दक्षाध्वगेन कार्यम् । तत्त्वत्रयप्रकाशनं तु गन्धोदकेनैव शङ्खगतेन । अपरेण तु तत्त्वत्रयप्रकाशनादिकमासवेनैव कार्यमिति । यद्यप्यवाच्योऽयमर्थः, तथापि तत्त्वचिन्तायां सुगोप्यमपि वक्तव्यमित्यस्माभिः प्रोक्त इति । अथ बाह्यार्चनविधिः — पीठवामदक्षगौ गुरुगणेशौ, ततः कालाग्निरुद्राधारशक्त्यनन्तपृथिवीविद्याब्धिपोताम्बुजासनचक्रासनसर्वमन्त्रासनसाध्यसिद्धासनरत्नपर्यङ्कशक्तिपीठासनानि मध्येऽर्चयेत् । कालाग्निरुद्रादयश्चतुर्थ्यन्तैर्नमोन्वितैः स्वनामभिः पूज्याः, विद्याब्ध्यादयः शुद्धाबालात्रिपुरवासिनीत्रिपुराश्रीत्रिपुरादेवीत्रिपुरासिद्धामन्त्रैः । धर्मादीन् पीठपादचतुष्कत्वेनाग्न्यादिकोणेष्वधर्मादींस्तद्गात्रत्वेन प्रागादिचतुर्षु दिक्षु श्रीमद्द्वादशार्धविद्यया तदुपरि पुष्पतूलिकमभ्यर्च्य तदुपरि मायाविद्ये पद्मं चेष्ट्वा तद्दलेषु कर्णिकायां च नव शक्तीर्यजेत् ।

इच्छा ज्ञाना क्रिया कामी कामदायिन्यनन्तरम् ।
रतिनी रतिपूर्वा च प्रिया नन्दा मनोन्मनी ॥

ततो नवयोनिं मध्ययोनौ शक्तिद्वादशकं पीठचतुष्कं च ।

वामा ज्येष्ठा च रौद्री च साम्बिकेच्छा तथैव च ।
ज्ञाना क्रिया कुब्जिका च रविही(च?)सविषघ्निका ॥
दूतरी चैव सर्वाद्या नन्दाख्या चेति शक्तयः ।
रेखावक्रान्तरालेषु मध्यान्तं पूजयेदिमाः ॥

ऐं कामगिरिपीठाय नमः । क्लीं जालन्धरपीठाय नमः । सौः पूर्णगिरिपीठाय नमः । ऐं क्लीं सौः ओड्याणपीठाय नमः इति तदन्तः पीठचतुष्कं, मध्यकोणत्रयमध्येषु ह्सौः सदाशिवप्रेतपद्मासनाय नमः इति पीठं सगन्धाक्षतकुसुमामृतबिन्दुभिरभ्यर्च्य धूपदीपौ दत्त्वा ऐं क्लीं सौः श्रीत्रिपुरादेवीमूर्तये नम इति मूर्तिं स्पृष्ट्वा तस्यां स्वहृदयाज्ज्यो-

१. 'क्षवा', २. 'तर्प' ३. 'प्राश' ख. ग. पाठः.

तीरूपिणीं देवीं प्रवहनाड्यानन्दविद्ययावाह्य त्रिबालया व्याप्य लिपिन्यासमन्त्रन्यासाङ्गन्यासान्ते ऋष्यादिन्यासं प्राणप्रतिष्ठामुद्राप्रदर्शनं च प्राग्वत् कृत्वा नत्वा बालाद्यबीजेन

"आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्कं पुनः स्नानं वासोयुग्मं च भूषणम् ॥"

इत्युपचारान् दत्त्वा द्वितीयबीजेन त्रिशो दलादिभिरभ्यर्च्य तृतीयबीजेन सप्तवारं सप्तविंशतिवारं त्रिवारं वामृतबिन्दुं दत्त्वा परिवारार्चनं सानुज्ञो विदधीत । अक्षस्रजे नमः । विद्यापुस्तकाय अभयाय वरदाय इत्यायुधानि देवीकरपद्मेषु पुनरादिमां गुरुपादुकां देवीश्रीपादपद्मे अवशिष्टं देव्याः पृष्ठतः प्राङ्मध्ययोन्योरन्तराले परायै अपरायै परापरायै इति सामान्यतस्तत्रैवानन्तनाथादित्रिकं विशेषतः स्वगुरुद्वयं तत्पुरतः प्राक्प्रत्यक्तयेति पूजयेत् ।

पार्श्वयोश्च रतिं प्रीतिमग्रतश्च मनोभवम् ।
वह्नीशरक्षोवाय्वग्रचतुर्दिक्षु यथाक्रमम् ॥
मध्ययोन्यन्तराले चाप्यङ्गषट्कं प्रपूजयेत् ।
अभितो मध्ययोनेश्च द्वौ द्वौ पञ्चममग्रतः ॥
बाणान् सम्पूजयेत् पञ्च द्रांद्रींक्लींब्लूंसआदिकाः ।
शोषणमोहनसन्दीपनतापनमादनाः ॥
बाणाश्चतुर्थीनत्यन्ता ज्ञेयाः स्वस्वाङ्कमूर्तयः ।
सुभगा च भगा चैव तदन्ते भगसर्पिणी ॥
भगाद्या मालिनी चैव पूज्या दिग्योनिषु क्रमात् ।
अनङ्गानङ्गकुसुमा तथैवानङ्गमेखला ॥
अनङ्गमदना चैव पूज्याः स्युः कोणयोनिषु ।
ब्रह्माणीम.सिताङ्गेन माहेशीं रुरुणा सह ॥
कौमारीं चण्डसंज्ञेन क्रोधेन सह वैष्णवीम् ।
उन्मत्तेन च वाराहीमिन्द्राणीं च कपालिना ॥

भीषणेनापि चामुण्डीं संहारेणापि चण्डिकाम् ।
दलेषु हि यजेदेताश्चतुर्थ्यन्तैः स्वनामभिः ॥

आं ब्रह्माण्यै अं असिताङ्गभैरवाय इत्यादि ।

पुनरिन्द्रादिकान् दिक्षु बहिर्वज्रादिकांस्ततः ।

एवं परिवारान् सगन्धाक्षतकुसुमामृतबिन्दुभिरभ्यर्च्य देवीमूर्तौ चतुश्चत्वारिंशन्मन्त्रैः पुष्पाञ्जलिं कृत्वा धूपदीपौ दत्त्वा आरात्रिकं विधाय सघृतकदलीनालिकेरोपदंशं सशर्करं च सुशृतं शाल्योदनं निवेद्य समर्प्याग्निकार्यं कृत्वा ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं स्वाहेति बलिं विकीर्य नत्वा पानीयामृतं दत्त्वा निवेद्यं विसृज्य ऐं उच्छिष्ट चण्डालि! मातङ्गि! सर्ववशङ्करणि! स्वाहेति तस्यै दत्त्वा गण्डूषादि दत्त्वा प्रसन्नपूजां विधाय ब्रह्मार्पणमात्मार्पणं च कृत्वा तीर्थं स्वीकृत्य स्तुत्वा नत्वा स्वयं तन्मयो भूत्वा लयाङ्गं विधायात्मन्युद्वास्य प्राणप्रतिष्ठां कृत्वा स्वात्मनि देवीमूर्तौ चैकैकवारं पुष्पाञ्जलिं कृत्वा शङ्खमभ्यर्च्य निधायाङ्घ्र्यादिपूर्वकं यथाकालं यथारुचि च मन्त्रं जप्त्वा योगान् कृत्वा देवतामयो भूयादिति शिवम् ॥ १४ ॥

'परावरमयीमि'त्यत्र किं तत् परं रूपं देव्या अवरं रूपं वा किमित्याकाङ्क्षायां परं रूपं तावदाह —

**शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे**
**त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम् ।**
**लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी**
**सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे॥१५॥**

शब्दानां जननी त्वमत्रेति । हे वाग्वादिनि! वाचं वागिन्द्रियं वादयितुं शीलमस्या इति वाग्वादिनी, तत्र सम्बोधनं तथा, हे सरस्वति! अत्र शब्दार्थात्मके भुवने । त्वं शब्दानां जननीति सद्भिरुच्यसे, परापश्यन्त्यादिक्रमेण पञ्चाशद्वर्णात्मना परिणतत्वात् सर्वेषां वेदादि-

१. 'वैक्' ग. पाठः. २. 'च' ख. पाठः.

लक्षणानां शब्दानां तन्मयत्वाच्च। नैवं वयं ब्रूमः। किन्तु केशववास-वप्रभृतयः केशवप्रभृतयो वासवप्रभृतयश्च प्रधानार्था अपि। त्वत्तः करपादावाविर्भवन्ति। किं पुनरितरेऽर्थाः। ध्रुवं निश्चितमेतद्, अर्थस्य शब्दविवर्तत्वाद्। यथाहुः—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥"

इति। अथवा 'तद्धेदं तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यां व्याक्रियत' इति नामरूपप्रपञ्चस्यैकस्मात् तत्त्वादेवाविर्भावश्रवणाच्छब्दस्य च त्वत्संभूतत्वसम्प्रतिपत्तेरर्थोऽपि त्वत्त एवाविर्भवतीति गम्यत इत्यर्थः। केशवप्रभृतय इति ब्रह्मविष्णुरुद्रेश्वरसदाशिवा विश्वसर्गादिपञ्चकृत्य-कारिणो गृहीताः। वासवप्रभृतय इति सृज्यदेवमनुष्यादयः पशुपक्षि-सरीसृपस्थावराश्च। नन्वमरत्वेन नाशहीनानां केशवादीनां वासवादी-नां वा कथं जन्मेत्यत उक्तम्—अमी ब्रह्मादयः ते वासवादयोऽपि यत्र यस्यां खलु कल्पविरमे लीयन्ते च आकल्पजीवित्वेनैव तेषाममर-त्वं, न नित्यतया। जगज्जन्मादिक्रियाभावे तत्कर्तॄणां सत्त्वासम्भवात् सर्वेषां त्वत्स्वरूपत्वेन स्वरूपनाशाभावेऽप्युपाधिनाशेन नाशोपपत्तेश्चे-त्याशयः। उत्पत्तौ केशवाद् ब्रह्मेति* (केशवाद्ध्वनति सहितं?) संहारे ब्रह्मा केशवे इति विपरीत पाठः। उक्तं च सकलजननीस्तवे—

"मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः
पयोधौ कल्लोलप्रतिभयमहिम्नीव पृषताः।
उदेत्योदेत्याम्ब! त्वयि सह निजैस्तात्त्विकगुणै-
र्भजन्ते तत्त्वौघाः प्रलयमनुकल्पं परवशाः॥"

इति,

"विरिञ्च्याख्या मातः! सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम्।
भवन्ती सादाख्या शिवयसि च पाशौघदलनै-
स्त्वमेवैकानेका भवसि कृतिभेदैर्गिरिसुते!॥"

१. 'किं' ख., 'र्ति' क. पाठः.

* 'केशवपदेन ध्वनितम्' इति स्यात्।

इति च। यैवं शब्दार्थप्रपञ्चजननी, सा त्वम्। उभाभ्यां शब्दार्थाभ्यामुत्तीर्णत्वाद् अचिन्त्यरूपगहना अचिन्त्येन रूपेणाखण्डानन्दसंविदात्मकेन गहना दुर्विज्ञेया। काचित्, परा सर्वोत्कृष्टा। माहेश्वरी शक्तिर्गीयसे,

"न तस्य कार्यं करणं च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते"

इति। हन्त तर्हि शक्तिमान् शिवः प्रलयेऽपि पृथगस्तीति नाद्वितीयत्वमस्या इति चेद्, न। शक्तिशक्तिमतोर्भेदाभावात्। नो खलु तिलादेस्तच्छक्तेर्वा भेदं कश्चिदवैति। अत एवोक्तं पूर्वसूरिभिः—

"शिवः शक्तिरिति ह्येकं तत्त्वमाहुर्मनीषिणः"

इति।

"न शिवेन विना देवी देव्या च न विना शिवः।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव॥"

इत्यादि। अत्रैकस्मिन्नपि शिवशक्त्यात्मके चिदानन्दमात्रपरमार्थे प्रकाशविमर्शरूपे वा तत्त्वे संविदद्वैतवादे शक्तिप्राधान्येन व्यवहारः, ईश्वराद्वैतवादे शक्तिमत्प्राधान्येनेति भेदो ज्ञेयः। वाग्वादिनीति संबोधनेन श्रीवागीश्वरीमन्त्रः प्रतीकग्रहणेनोद्धृतो वेदितव्यः—वदवद वाग्वादिनी स्वाहा।

"अस्याः कण्वविराड्वागीश्वर्यो मुन्यादिकाः क्रमात्।
ह्रस्वदीर्घस्वरान्तस्थैर्हलिभरङ्गादि षट् चरेत्॥"

अयमस्य श्लोकस्य तात्पर्यार्थः—शिवशक्तिसदाशिवेश्वरशुद्धविद्यामायाकालकलाविद्यारागनियतिपुरुषप्रकृत्यहङ्कारबुद्धिमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निवारिवसुन्धराः षट्त्रिंशत् तत्त्वानि। तन्मय एवायं शब्दार्थात्मकः प्रपञ्चः। तानि च शिवशक्त्याख्यं सच्चिदानन्दघन तत्त्वं (तत्व ?)द-

१. 'ह्रणे', २. 'पदं वाग्वादिनीडं अ' क. पाठः.

र्पणनगरन्यायेनाविर्भवन्ति तिरोभवन्ति च। तदेव च तत्त्वं सर्वभूताना-
मन्तरहमस्मीति सदा भासते। अथापि स्वेन चिदानन्दघनरूपेण न
भासते, किन्तु शून्यबुद्धिप्राणदेहतयैव। अज्ञोऽहमिति शून्यतया,
सुख्यहं दुःख्यहमिति बुद्धितया, बुभुक्षुः पिपासुरहमिति प्राणतया,
स्थूलोऽहं कृशोऽहमिति देहतया। तत्त्वशून्यतया भाने हेतुर्माया, स्वे-
नात्मना भाने हेतुः शुद्धविद्या। ताभ्यामस्य बन्धमोक्षौ, मायया बन्धो
विद्यया मोक्षः। तत्र स्वरूपानन्दानुभवतृप्तोऽपि परमेश्वरो यदा स्वा-
त्मानमेव शब्दार्थात्मकप्रपञ्चात्मना विवर्तयितुमिच्छति तदा शिवः,
तदीया सा इच्छा शक्तिः, अप्रतिहतेच्छत्वात्। तदेव स्वात्मनि पूर्वमेव
सदिव सहसा भासमानं विश्वमहमिदमिति शुद्धविद्यया स्वात्मतयैव
पश्यन् सदाशिवः, स एवेदमहमिति कूपोदकमध्ये स्वदेहच्छायामिव
शुद्धविद्ययैव स्वात्मनः पृथगिव पश्यन् ईश्वरः, तेनानयोः पदयोः
मोक्षसुखानुभूतिरेव। माययात्मनः पृथगेव यदासौ विश्वं विश्वेश्वरं च
पश्यति, तदा पुरुषः। तस्यैव नित्यस्याप्यनित्यताभानहेतुत्वेन तस्मि-
न्नेव भासमानः कालः। सर्वकर्तुरपि किञ्चित्कर्तृत्वे हेतुः कला। सर्वज्ञ-
स्यापि किञ्चिज्ज्ञत्वकारणमविद्या। निरञ्जनस्यापि विषयाभिषङ्गहेतू
रागः। सर्वगतस्यापि ममेदं न ममेदमिति[3] नियमहेतुर्नियतिः। मायया
सहितमेतत्कालादि नियत्यन्तं कञ्चुकषट्कमिति भाष्यते सङ्कोचक-
त्वात् पुरुषस्य। अयं च सङ्कोचक्रमः—यदा पुनरीश्वरः स्वस्मात्
पृथगिव भासमानं विश्वं स्वमाययैव प्रकृतिसंज्ञया रजोगुणमवलम्ब्य
महदादिक्रमेण पृथगेव करोति, तदा स्रष्टा हिरण्यगर्भो भवति। तत्रै-
वान्तर्यामित्वेन प्रकृतेः सत्त्वगुणमवलम्ब्यानुप्रविश्य यदा नियमयति,
तदा विष्णुः। स एव प्रकृतेस्तमोगुणमवलम्ब्य यदा संहरति, तदा
रुद्रः। एवं गुणत्रयात्मिका प्रकृतिः। सैवेशशक्त्या पराख्यया क्षुभि-
तगुणा कालकर्मानुगुण्ये महान्तं सृजति। ततोऽहन्तत्त्वम्। ततः शब्दा-
दिपञ्चकमाकाशादिपञ्चकमिन्द्रियदशकमन्तःकरणं चाहङ्कारो भूत्वा
सृजति। तत्र प्रथममिच्छाज्ञानक्रियाशक्त्यात्मकं मनोबुद्ध्यहङ्काराख्य-
मन्तःकरणं, ततो ज्ञानक्रियासाधनानि करणानि, ततो ज्ञेयं कार्यं च

१, २. 'भावेन हे' ख. पाठः. ३. 'दमपि नि' क. पाठः.

शब्दादिपञ्चकं, ततस्तदाश्रयभूतमाकाशादिपञ्चकं च सृजति। एवं सृष्टानि महदादीनीश्वरेच्छया कालक्रमेणान्योन्यं मिलित्वा हैमं ब्रह्माण्डमुत्पादयन्ति। तस्मिंश्च कारणोदकशायिनि तदनुप्रवेशात् परिपक्वे विभिन्ने च सहस्रशीर्षादिमान् पुरुषो भवति। तस्य नाभिपद्माद्धिरण्यगर्भः। स चतुर्दश भुवनानि तद्गतानि जरायुजाण्डजस्वेदजोद्भिज्जभेदेन चतुर्विधानि भूतानि च सृष्ट्वा तेष्वनुप्रविष्टः स्वमायया कालादिसङ्कोचं प्राप्तः पशुर्भवति। यः सुरोऽसुरो नरो नारकी इति चोच्यते। स च देहादिसङ्कोचमितस्तत्कृतपुण्यापुण्याभ्यामूर्ध्वं चाध इहलोके च भ्रमति। तस्य देहोद्भवहेतवो महदादय एव। अतो यदासौ संसारादुद्विग्नस्तत्त्वज्ञं गुरुवरमुपगम्य तस्मान्मन्त्रदीक्षां प्राप्य स्वात्मानमेव परमेश्वरमुपास्ते, तदा तत्प्रसादात् पिण्डमण्डेऽण्डं भूमौ भूमिमप्सु अम्भांसि तेजसि तद् वायौ तमाकाशे तमहङ्कारे तं महति तं प्रकृतौ प्रकृतिं मायायां तां च सकार्यां विद्यायां तामीश्वरे तं सदाशिवे तमपि शिवशक्त्यात्मके तत्त्वे संहृत्याहं विश्वस्रष्टा ब्रह्मा पालको विष्णुः संहर्ता रुद्रः तिरोधायक ईश्वरः सर्वानुग्राहकः सदाशिवः सृज्यादिपदस्थाः सर्वे देवासुरादयश्चाहमेव न कालत्रयेऽपि मत्तोऽन्यत् तत्त्वान्तरमस्ति। अहं च सदानन्दचिद्घनापघनः परशक्तिपरिरम्भितः परमशिव एव, न पुनर्मनुष्याभास इति साक्षादीक्षते, तदा परा शक्तिः रूपान्तरमपहाय परमशिवसामरस्यं गता तत्रैव रमते। पुमांश्च मुक्तो भवति। सेयं बन्धावस्था मोक्षावस्था चात्र प्रकाशितेति शिवम्॥ १५॥

एवं शब्दार्थमयप्रपञ्चोत्तीर्णं देव्याः परं रूपं तत्त्वज्ञानार्थमुपदिश्य इदानीमुपासनार्थमपरं रूपमुपदिशति —

**देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-**
**स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः।**
**यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं**
**तत् सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः॥ १६॥**

१. 'चि' क. पाठः,

देवानां त्रितयं त्रयीति । हे भगवति !

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥"

एतदैश्वर्यादिषट्कं यस्यां सदा सामस्त्येन वर्तते, सा भगवती, तस्याः सम्बोधनं तथा । यत्किञ्चिज्जगति त्रिधा नियमितं कल्पितं त्रिवर्गात्मकं स्वतस्त्रिरूपं वा वस्तु तत्सर्वं ते त्रिपुरेति नाम, तत्त्वतः तस्य भावस्तत्त्वं तस्मात् तद्रूपत्वाद् भवत्या अन्वेति अनुगच्छति वक्तीति यावत् । तदेवाह — देवानामित्यादिना । देवानां वसुरुद्रादित्यानाम् , अग्निवायुसूर्याणां, ब्रह्मविष्णुरुद्राणां वा त्रितयम् । हुतभुजां, गार्हपत्यान्वाहार्याहवनीयाग्नीनां भौमजाठरवडवामुखाग्नीनां वा त्रितयं । त्रयी त्रयो वेदाः । शक्तित्रयम् इच्छाज्ञानाक्रियात्मकम् । त्रिस्वराः उदात्तानुदात्तस्वरिताः । त्रैलोक्यं भूर्भुवःस्वर्लोकाः । त्रिपदी गायत्री । त्रिपुष्करं त्रयाणां देवर्षिपितॄणां पुष्टं पुष्टिं तृप्तिं करोतीत्युपवीतम् । त्रिब्रह्म त्रिरूपं ब्रह्म प्रणवः, आत्मान्तरात्मपरमात्मानो वा । 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति भगवद्वचनात् । सत्त्वादिगुणभेदेन त्रिधा स्थिता वा प्रकृतिस्त्रिब्रह्म । त्रयो वर्णास्तारगता एतन्मन्त्रगता वा । अ-इ-उ-वर्णा वा लिपिगताः स्वरव्यञ्जनव्यापकार्णा वा श्वेतरक्तकृष्णा वा ब्राह्मणक्षत्रियवैश्या वा । किं बहुना, यत्किञ्चिद् जगति त्रिधा नियमितं त्रिवर्गात्मकं वा तत्सर्वं ते त्रिपुरेति नाम तत्त्वतोऽन्वेतीति योज्यम् । यत्किञ्चिच्छब्देन धर्मादित्रिकं जाग्रदादित्रिकं मातरादित्रिकं सुषुम्नादित्रिकं व्याहृतित्रिकं कालत्रिकं पुरुषत्रिकं लिङ्गत्रिकं वचनत्रिकं कारणत्रिकं तेजआदित्रिकमित्यादि गृह्यते । तदेवं शब्दार्थात्मकं तत्कारणत्वादुभयोत्तीर्णं स्वप्रकाशाखण्डानन्दसंविद्रूपं च देव्याः परापररूपमिह द्वाभ्यां श्लोकाभ्यां प्रकाशितमिति शिवम् । एवं त्रिपुराशब्दार्थमन्त्रदेवतातत्त्वमिह सङ्ग्रहविस्तराभ्यामादित आरभ्य गतग्रन्थेन कथितम् । तच्च चतुर्विधपुरुषार्थार्थिनां स्त्रीपुरुषभेदेन सर्वेषां वर्णानां बोध्यम् एकैकबीजस्यापि महाफलत्वात्

१. 'वानाम् ऋषीणां पि', २. 'संव्यम्' ख. पाठः.

पृथङ्मन्त्रत्वाच्च सुसेव्यमिति चोक्तम्। विहितद्रव्यालाभेन पूजा नक्ष नापि त्याज्येति द्रव्याणि च बहून्युपदिष्टानि। तेषु क्षीराज्येति पाठेन क्षीरस्य मुख्यत्वं, विप्राः क्षोणिभुज इति ब्राह्मणस्यार्चकेषु मुख्यत्वं चाभ्यर्हितं पूर्वं निपततीति न्यायात् प्रकाशितम्। भक्ष्यभोज्यलेह्यपेयेषु शिवाया अर्चने पेयद्रव्यस्य प्राधान्यमन्यस्य तच्छेषत्वमिति च द्रवद्रव्याणामेव ग्रहणात् तर्पणशब्दाच्च व्यञ्जितम्।

"कुङ्कुमागरुकर्पूररोचनाकपिचन्दनम्।
कचोरसान्वितं शक्तेर्ग्राह्यं गन्धाष्टकं बुधैः॥"

एतच्च बिल्वीदलेति पुष्पग्रहणेन सर्वत्र सहपाठादुपसंगृहीतमार्यैः॥१६॥

अथ परापरेति शिवशक्त्यात्मकस्य सविभूतिकस्य ब्रह्मणः परशब्देन नाममन्त्रप्रवाहात्मनोऽपरस्य ब्रह्मणश्च परशब्देन ग्रहणान्मन्त्रेषु त्रिपुराशब्दार्थभूतमन्त्राणामेव प्रकाशितत्वाद्, नामसु चास्य त्रिपुरानाम्न एव प्राधान्येनोक्तत्वात् सगुणपक्षे देव्या विभूतिभेदानामनुक्तत्वाच्च नानाकार्यार्थिभिः सेव्यानि देव्या नामानुरूपाणि चाविष्कुर्वंस्त्रिपुरानाम्न एवासाधारणं फलं तावदाह—

लक्ष्मीं राजकुले जयां रणमुखे क्षेमङ्करीमध्वनि
क्रव्याद्द्विपसर्पभाजि शबरीं कान्तारदुर्गे गिरौ।
भूतप्रेतपिशाचजम्भकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे॥१७॥

लक्ष्मीं राजकुल इत्यादि। भगवतीत्यनुषज्यते। त्वां राजकुले वर्तमानास्तदुचितोपकरणपरिजनभवनादिविहीनाः सर्वस्यैतस्य सत्त्वेऽपि प्रबलतरैः प्रतिराजन्यैः पीड्यमाना वा लक्ष्मीं महालक्ष्मीं[1] त्वां तन्नाम्ना स्मृत्वा विपदो दुःखानि तरन्ति त्यजन्ति। रणमुखे वर्तमानाः प्रतियोद्धृभिर्बाध्यमानाः जयां जयादेवीं त्वां तन्नाम्ना स्मृत्वा विपदस्तरन्तीत्यन्वयः। क्रव्याद्द्विपसर्पभाजि क्रव्यादाः वृकव्याघ्रादयः द्विपा

१. 'क्ष्मीरूपां त्वां' ख. पाठः.

गजाः सर्पाश्च तैर्युक्तेऽध्वनि क्षेमङ्करीं देवीं त्वां तन्नाम्नानुस्मृत्य । कान्तारदुर्गे गिरौ दुर्गमं वर्त्म कान्तारं तेन दुर्गे दुरारोहे गिरौ । शबरीं शबरीरूपिणीं त्वां तन्नाम्ना स्मृत्वा । भूतप्रेतपिशाचजम्भकभये भूता रुद्रपार्षदाः, प्रेताः पिशाचाः, जम्भका राक्षसाश्च तेभ्यो भये जाते महाभैरवीं त्वां तन्नाम्ना स्मृत्वा । व्यामोहे बुद्धिभ्रमे जाते त्रिपुरां त्वां तन्नाम्ना स्मृत्वा । तोयप्लवे तोये प्लवं प्लवनं मज्जनं तस्मिन् प्राप्ते तोयराशिमध्यस्थे प्लवे नौकायां वर्तमाना वा तारां त्वां तन्नाम्ना स्मृत्वा विपदस्तरन्ति । एतेषां सप्तनाम्नां जपप्रकारमुत्तरत्र स्पष्टीकरिष्यामः ॥ १७ ॥

अथ देव्या मन्त्रपारायणात्मकमपरं रूपमाह —

**माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी**
**मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।**
**शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी**
**ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ १८ ॥**

मायाकुण्डलिनीति । भगवतीत्यत्राप्यनुषज्यते । मायादिकुमारीत्येतदन्तं[1] यच्छब्दरूपं, तत्सर्वं त्वमसीत्यन्वयः । ह्रींकारो माया, ऐङ्कारः कुण्डलिनी, क्लींकारः क्रिया, मधुमती मातृका शुद्धा सबिन्दुका सविसर्गा च । काली कला मालिनी मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी इति दश नामानि । शक्तिः श्रीबालातृतीयबीजम् । शङ्करवल्लभा रुद्रशक्तिः । हकारसकाराभ्यां सहिता सदा-हस्थिता च त्रिपुराविद्या यदा द्वितीयबीजे निष्कला भवति । (भोजे ?) तदा ह्सी इति साप्युद्धृता स्यात् । त्रिनयना कामबीजं मणिजम् अक्षिषु नेत्रस्थानेऽस्य भावात् । वाग्वादिनी वागीश्वरी सा तूद्धृतैव 'शब्दानां जननी त्वमि'त्यत्र भैरवी पञ्चकूटकं, तदुद्धृतमेव । ह्रींकारी भुवनाधिपतिबीजं स्वरूपेणैवोद्धृतम् । त्रिपुरा श्रीसौभाग्यविद्या । परापरमयी शिवशक्तिमन्त्रः, मध्यमचतुष्कूटत्रिपुराश्रीमन्त्रतृतीयबीजत्वात् सोऽप्यु-

---

१. 'त्येतदन्त' क. ग. पाठः. २. 'ह्रीं इ' क. पाठः.

द्धृतः । माता श्रीमद्द्वादशार्धविद्या, साप्याद्यावुद्धृता । कुमारी बाला, सा प्रत्यक्षत एवोद्धृता । यद्यपि प्राक् सौभाग्यविद्या नोद्धृता, तथाप्यस्मिञ्छ्लोक एव सा प्रकाशिता । कथम् । माया ह्रींकारीति द्विरुक्त्या भुवनाधिपतिबीजस्य, क्रिया त्रिनयनेति कामबीजस्य च द्विरुक्तिरावृत्तिं द्योतयति । परापरमयीति हसौ च गृहीतौ । त्रिरुक्तौ हसाभ्यां सहितौ च माया कामार्णौ च केवलं सौभाग्यविद्या । कुण्डलिनीति शब्दादेकारोऽपि गृहीतः, ऐकारे तस्यान्तर्भावात्, एकारस्यावर्णेन वृद्धियोगादैकारोत्पत्तिरिति । अथवा आद्यश्लोक एव साप्युद्धृता । कथं, षट्कूटस्योद्धृतत्वात् विद्यामन्त्राक्षराणां सर्वेषां तत्रान्तर्भावाच्च प्रायेण सर्वे मन्त्रा अस्यामेवाविर्भवन्तीत्याशयेन च मातृशब्दोऽस्यां प्रयुक्तः । एतद्देवतायास्त्रिपुराम्बिकाभिधानत्वाच्च । एवं दश मन्त्राश्चोक्ताः । एतेषां परस्परयोगान्मन्त्रपारायणं भवति । तद्यथा — ह्रीं अ काली सौः अयमादिमो मन्त्रः । अस्मिंस्त्रिषु बीजेषु आद्यं बीजं चतुर्विधमातृकाशुद्धाद्याक्षरं दशसु नामस्वाद्यं नाम दशसु मन्त्रेष्वाद्यो मन्त्रश्च भवति । एवं ह्रीं आ काली सौः इत्यादिं शुद्धायां मातृकायां पञ्चाशन्मन्त्राः ह्रीं क्ष काली सौः इत्येवमन्ताः । तथा ह्रीं अं काली सौः इत्यादिसबिन्दुकायां च पञ्चाशत् । ह्रीं अः काली सौः इत्यादिसविसर्गायां पञ्चाशत् । ह्रीं अः काली सौः इत्यादिसबिन्दुगर्भायां च पञ्चाशत् । ह्रीं अः काली सौः इत्यादिबिन्दुविसर्गान्वितायां च पञ्चाशत् । इत्थं द्विशतं मन्त्राः । मायाबीजस्थाने वाग्भवबीजं योजयित्वान्यत् सर्वं पूर्ववदेव कृत्वा च द्विशतम् । पुनस्तृतीयं कामबीजमादौ कृत्वान्यत् सर्वं प्राग्वदेव कृत्वा च द्विशतमिति षट्छतं मन्त्राः । पुनः कालीनामस्थाने कलानाम कृत्वान्यत्सर्वं प्राग्वदेव कृत्वा च षट्छतम् । एवं प्रतिनामेति षट्सहस्रभेदाः । पुनराद्यस्य शक्त्याख्यस्य मन्त्रस्य स्थाने शङ्करवल्लभां योजयित्वान्यत्सर्वं प्राग्वदेव कृत्वा च

---

१. 'द्या' क. पाठः. २. 'वृत्तः । ए' ख. पाठः. ३. 'देविका' क. पाठः. ४, ५. 'ग्वत् कृ' ख. पाठः.

षट्सहस्रं ह्रीं अ काली ह्स्री इत्यादि । एवं प्रतिमन्त्रमिति षष्टिसहस्रं मन्त्रा भवन्तीति । अथापरः प्रकारः बीजत्रयचतुर्विधमातृकायोजनया कालीनाम्नि षट्शतमन्त्रेषु सम्भूतेषु तस्मिन्नाम्नि स्थित एव मन्त्रेषु द्वितीयस्य योजनायामपि षट्शतं मन्त्राः । एवं तृतीयादिमन्त्रयोजनायामपि प्रत्येकं षट्शतमिति सर्वमन्त्राणां कालीनाम्ना योजने षट्सहस्रवाचकाः । एवं कलादिनामभिर्योजनेऽपीत्यत्रापि षष्टिसहस्रं मन्त्राः स्युः । पूर्वश्लोकोक्तलक्ष्म्यादिनाम्नामप्यनया रीत्या जपः कार्यः, ह्रीं अ लक्ष्मी सौः इत्यादि । तत्रापि प्रतिनाम दशानां मन्त्राणां योजने द्विचत्वारिंशत्सहस्रं मनवो भवन्ति । तथाच लक्षादुपरिद्विषष्टिसहस्रं मन्त्रपारायणं भवतीति शिवम् ॥ १८ ॥

अथ नामपारायणमाह —

**आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमादक्षरैः**
**काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः ।**
**नामानि त्रिपुरे! भवन्ति खलु यान्यत्यन्तगुह्यानि ते**
**तेभ्यो भैरवपत्नि! विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥**

आईपल्लवितैरिति । हे भैरवपत्नि! सर्वद्वैतप्रपञ्चघस्मरज्योतीरूपो महेश्वरो भैरवस्तस्य स्वभावभूता तदेकाश्रया तस्मिन्नेव रममाणा च पराशक्तिसंज्ञा स्फुरत्ता भैरवपत्नी, तस्याः सम्बोधनं तथा । आईपल्लवितैः आ ई इति शब्दशिरस्कैः काद्यैः क्षान्तगतैः कादिक्षान्तगैः पञ्चत्रिंशदक्षरैर्यानि तेऽत्यन्तगुह्यानि नामानि भवन्ति, विंशतिसहस्रेभ्यः परेभ्यो विंशतिसहस्रादुपरि षष्टिशतसंख्येभ्यः तेभ्यो नमः । त्वन्नाम्नामपि तावन्नमस्कार्यत्वं, ध्यानेन विनापि जप्तुः फलप्रदत्वात् । किं पुनर्नामधेनाया भवत्या इत्यर्थः । कथम्भूतैः अक्षरैः स्वरादिभिः क्षान्तगतैः षोडशधा भिन्नं स्वरमादिं कृत्वा क्षकारपर्यन्तं गतैः द्वित्रिक्रमाद् द्वित्रिवर्णक्रमात्परस्परयुक्तैश्च, अ का ई इत्यादि अः का ई इत्यन्तम्, एवं अ खा ई अ गा ई अ घा ई इत्यादि, अः क्षा ई इत्य-

१. 'री' ख, पाठः. २. 'तच' क. पाठः. ३. 'पि न', ४. 'ध्या' ख. पाठः.

न्तं जपेत् । षट्षष्ट्युत्तरं पञ्चशतं मन्त्राः स्युः । अथ सस्वरैश्च तैः क. का. कि. की. इत्यादिरूपैः तेषामेव पञ्चत्रिंशद्वर्णानां योजने प्रत्येकं षष्ट्युत्तरं पञ्चशतं मन्त्रा भवन्ति । ककाई काकाई इत्यादि कखाई काखाई इत्यादि कक्षाई काक्षाई इत्यादि कः क्षाई इत्यन्तम् । एवं खकाई इत्यादि खः क्षाई इत्यन्तम् । तथा गकाई इत्यादि गः क्षाई इत्यन्तम् । अवसाने क्षकाई क्षःकाई इत्यन्तम् । एवं नामपारायणक्रमपि देव्या अपरं रूपमाविष्कृतमिति शिवम् ॥ १९ ॥

एवं स्तुतिमुपसंहृत्यास्याः सद्भिरभ्यसनीयत्वमाह —

**बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं**
**भारत्यास्त्रिपुरेत्यनन्यमनसो यत्राद्यवृत्ते स्फुटम् ।**
**एकद्वित्रिपदक्रमेण कथितस्तत्पादसंख्याक्षरै-**
**र्मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥२०॥**

बोद्धव्या निपुणमिति । अत्रापि भैरवपत्नीत्येतदनुपज्यते । देवताया गुणप्रवाहवर्णनेनाहो अहम् अहो अहमित्यात्मन्याश्चर्यबुद्धिजननी स्तुतिः। त्रिपुरेति प्रसिद्धाया भारत्यास्तवेयं स्तुतिः बुधैर्विवेकिभिः तद्गतं तस्यां भारत्यां त्वयि गतं मनः कृत्वा निपुणं बोद्धव्या सम्यग्धारयितव्या । तत्र त्रिपुराभारतीविषयत्वं तावदेको हेतुः । हेत्वन्तरमाह — यत्र यस्यां स्तुतावनन्यमनसः नान्यत्र मनो यस्य किन्तु त्वय्येव, तस्य पुंसस्तं प्रति आद्यवृत्ते प्रथमश्लोके तत्पादसंख्याक्षरैः तस्य पादसंख्यया समानसंख्यैरक्षरैः । इत्थम्भावे तृतीया । समानसंख्याक्षरत्वेन एकद्वित्रिपदक्रमेण प्रथमद्वितीयतृतीयपादक्रमेण मन्त्रोद्धारविधिः कथितः कृतः । प्रथमपादे प्रथमाक्षरत्वेन द्वितीयपादे द्वितीयाक्षरत्वेन तृतीयपादे तृतीयाक्षरत्वेन च यत्र श्रीबालामन्त्र उद्धृत इत्यर्थः। कथम्भूतः विशेषसहितः त्रिपुरामन्त्रविशेषैः सहितः, विशेषाः तस्मिन् कथञ्चिदुद्धृता इत्यर्थः । स्फुटमिति प्रत्यक्षतं उद्धृत इत्यर्थः

— १. 'न्तम् । एवं' क. पाठः. २. 'न य', ३. 'रसुद्गृ' ख. पाठः.

सत्सम्प्रदायान्वित इति सन् निर्दोषश्चासौ सम्प्रदाय उपदेशपरम्परा च सत्सम्प्रदायः, तेनान्वितो युक्तः। गुरुवरोपदेशपरम्परया मया प्राप्तो नाधुना क्लृप्तः, येन पौरुषेयतयाप्रामाण्यशङ्का स्यात्। सम्प्रदायप्राप्ता एव मन्त्रा अत्रास्माभिरुद्धृता इत्यर्थः। अवहितचित्तेनैव हि सर्वं ज्ञातुं पार्यत इत्यनन्यमनसः कथित इत्युक्तम्। अथवा न भारत्या अन्यः कश्चिदहं, किन्तु सैवेति मनो यस्य सोऽनन्यमनाः, तस्य मम सम्बन्धिनीं, तथाभूतेन मया कृतामित्यर्थः। तेन कर्तृतो विषयतः स्वरूपतश्च शुद्धत्वमस्या इत्यवश्यमादरणीयत्वं विद्वद्भिरित्युक्तं भवतीति शिवम्॥ २०॥

ननु निर्दोषत्वेऽपि शब्दालङ्कारभूयिष्ठत्वाभावाच्छृङ्गारादिरससुधापात्रत्वाभावाच्च न रसिकैरभ्यसनीयत्वमस्या इति चेद्, मा भवतु तैरादरणीयम्। तथापि परदेवताभक्तिप्रधानत्वात् तद्बलेनैव मत्तः सम्भूतत्वाच्च देवताभक्ता अवश्यमिमामङ्गीकुर्युः। अतः सफलैवेयं स्तुतिरित्याह—

**सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया**
**नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि।**
**सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठात्**
**त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम्॥**

सावद्यं निरवद्यमित्यादिना। भैरवपत्नि! त्रिपुरे! इति सम्बोधनमत्रापि ग्राह्यम्। इदं सावद्यं सदोषं यदि वा निरवद्यं निर्दोषमस्तु। सालङ्कारत्वसरसत्वाभावदोषयुक्तं तद्विहीनं वा, भवतु, अनया चिन्तया किं वा, न किमपि प्रयोजनम्। कुतः, यस्य त्वयि भक्तिरस्ति, स जन इदं स्तोत्रं पठिष्यति। नूनं निश्चितमेतत्। तदपि कुतः। यस्मादात्मनि मयि भवत्याः स्तोत्ररचनोद्यते। अतो हेतोः सञ्जायमानमशक्यार्थकरणोद्यमात्तदेव मय्युत्पद्यमानं लघुत्वमाभासबुद्धित्वं दृढं संचिन्त्य निश्चयेनावगम्य तूष्णीमासीनेनापि। त्वद्भक्त्या त्वयि या भक्तिर्निरतिशयप्रीतिरूपिणी तया

१. 'त्रतन्त्रर' ख. पाठः.

मुखरीकृतेन वाचालतां नीतेन प्रवर्तितवाक्प्रसरेण मयाल्पश्रुतेना
हठाद् वेगेनाबुद्धिपूर्वमेव ध्रुवं निर्बाधमिदं रचितम्। निर्बाधमिति
लङ्कारत्वसरसत्वाभावदोषोऽपि विचारदशायां नास्मिन् स्तोत्रे
मस्ति। कुतः। 'स एष रसानां रसतम' इति मुख्यरसत्वेन श्रुतौ
तस्य शिवशक्त्यात्मकस्य तत्त्वस्याखण्डानन्दसंविद्रूपस्य तद्भक्तिरस
च सर्वत्रात्र प्राधान्येन व्यञ्जितत्वाद् अन्येषामपि रसानां यथाय
मेतदङ्गतयालङ्कारत्वेन व्यञ्जितत्वाच्च। 'दृष्ट्वा सम्भ्रमे'त्यद्भुतस्य,
न्नित्ये! तवे'ति करुणस्य, विरलो बालकोऽपि बुध इत्युक्तेः, 'यत्
वचसामि'ति चाद्भुतस्य, औकारस्य गकारसाहित्ये सरस्वती
कत्वं तद्राहित्ये तन्मन्त्रत्वमित्युक्तेः, 'एकैकं तवे'त्यद्भुतस्य, 'वा
स्तके'ति शान्तस्य, 'ये त्वां पाण्डरे'त्यद्भुतस्य, 'ये सिन्दूरे'ति
प्रलम्भशृङ्गारस्य, 'चञ्चत्काञ्चने'ति शृङ्गाराद्भुतयोः पूर्वापरार्धाभ्या
'आर्भट्ये'ति सम्भोगशृङ्गारशान्तयोः, 'जातोऽपी'त्यद्भुतवीरयो
'चण्डि! त्वच्चरणाम्बुजे'ति भयानकस्य, 'विप्राः क्षोणिभुज' इति
रुणस्य, सर्ववर्णाश्रमिणां स्त्रीपुरुषाभेदेन येन केनापि यथाल
द्रव्येणाभ्यर्चिता भगवती तं तं काममनुगृह्णातीति परमकारुण्यप्रती
'शब्दानां जननी'त्यद्भुतभयानकयोः पूर्वापरार्धाभ्यां, 'देवानां
यमि'त्यप्यद्भुतस्य, त्रिपुरानाम्नः सर्वार्थकवलनशक्तिप्रकारस्या
ष्कृतत्वात्, 'लक्ष्मीं राजकुले' इति भयानकस्य, 'माया कुण्डलि
त्यन्तयोराद्ये च भाव एव, न पुना रसान्तरमत्रास्ति। भक्तिरसे
पक्रम्य तेनैवोपसंहारे तत्रैवास्य तात्पर्यमिति च प्रत्यायितं भवति।
सश्लोकादिषूपमालङ्कारोऽपि क्वचित् क्वचिद् भवति, अनुप्रास
मार्यादयः शब्दालङ्काराश्च भवन्ति। गूढयोजनत्वगूढवर्णत्वादि
चित्रकाव्यता च विस्पष्टा विपश्चितामिति। तदेवं निर्दोषत्वात्
णत्वात् सरसत्वाच्च सर्वैः पठनीयमेतदिति सिद्धम्। यद्वा अना
गुरुपरम्पराप्राप्तत्वेन नित्यत्वादपौरुषेया इतीहोपदिष्टा मन्त्राः स्व
प्रमाणत्वेन ग्राह्याः। इदं स्तोत्रं त्विदानीं त्वयोक्तमिति पौरुषेयत्वा

१. 'क्तः' क. पाठः.

न प्रामाण्यनिर्णयः, तन्निर्णये वा न स्वतःप्रामाण्यनिश्चयः, येन सर्वे जना इदमङ्गीकुर्युरित्यत्राह — सावद्यमिति । अवद्यं दोषोऽप्रामाण्यं, तेन सह वर्तत इति सावद्यम् । यदि वा निरवद्यमिदमस्तु । अनया चिन्तया किं वा । नैषा चिन्ता कार्येत्यर्थः । कुत इत्यत आह— नूनमिति । यस्य त्वयि भक्तिरस्ति, आस्तिकपक्षपतितो भवति यः, स जन इदं स्तोत्रं पठिष्यति । नूनं तस्यैतत् स्वतःप्रमाणमेव भवतीत्यर्थः । तदेवोपपादयति — आत्मनि सञ्जायमानं लघुत्वं सञ्चिन्त्यास्माभिरशक्यक्रियोऽयमर्थ इति रचनोद्योगान्निवृत्तेनाल्पज्ञेन मयापि त्वद्भक्त्या मुखरीकृतेन त्वत्सेवनेन स्वात्मतयाविर्भूतया त्वया प्रबोधितबुद्धितत्त्वेनात एवाविर्भूतवाक्प्रसरेण च हठादक्लेशेन ध्रुवं नित्यमेवेदं रचितमाविष्कृतं न पुनरिदानीन्तनास्मद्बुद्धिविलाससम्भूतम् । तेन स्वतःप्रमाणमेवेदमागमयितव्यं विद्वद्भिरित्यर्थः । कर्त्रा स्वात्मनि लघुशब्दः प्रयुक्त इति लघुस्तुतिरित्यस्या लोके प्रसिद्धिः प्रवृत्तेति ज्ञेयम् । क्षिप्रकरणाद्वा, अर्थतो बहुत्वेऽपि विंशतिश्लोकमितत्वेन वा लघुस्तुतिः । लघो ऋँज्व्या भक्तानामवञ्चयित्र्या देव्याः स्तुतिर्वा लघुस्तुतिः ॥२१॥

एवमेकाधिकश्लोकविंशत्या शारदास्तुतिः ।  
लघुभट्टारकैः क्लृप्ता भक्तानां भुक्तिमुक्तिदा ॥

कृष्णानन्दमुनीश्वरस्य कृपया तुर्याश्रमं योऽश्रमं  
प्राप्याम्नायशिरोऽधिरूढमवगम्यात्मानमप्यात्मना ।  
आसाद्यापि च पद्धतिं शिवमयीमानन्दनाथाद् गुरो-  
रानन्दान्तिकराघवो मुनिरगात् तृप्तिं स वृत्तिं व्यधात् ॥

कृष्णस्त्रिलोचन इति त्रिपुरेन्दिरेति  
ब्रह्मेति वा यदुदितं परतत्त्वमेकम् ।  
सच्चित्सुखैकतनवे प्रणतोऽस्मि तस्मै  
सर्वात्मने सकलबन्धविदारणाय ॥

समाप्तोऽयं ग्रन्थः ।

---

शुभं भूयात् ।

---

१. 'द्यमप्रा' ख. पाठः. २. 'ऋद्धया भ' ख. पाठः.

## READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tîkasarvaswa of Vandyaghatiya Sarvananda (Part II, 2nd Kanda 1-6 Vargas) | 2 | 8 | |

